॥ श्रीः ॥

## हरिदास संस्कृत ग्रन्थमाला

८७

॥ श्रीः ॥

# बृहद् होडाचक्रविवरणम्

सम्पादकः

पं० श्रीमुरलीधरठक्कुर ज्योतिषाचार्यः



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

# बृहद् होडाचक्र-विवरणम्

ज्यौतिषाचार्य पण्डित श्रीमुरलीधरठक्कुरेण
सङ्कलितं, तत्कृतसरलहिन्दीव्याख्यया च
समलङ्कृतम्।



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

पञ्चम संस्करण ] ( सर्वेऽधिकाराः प्रकाशकाधीनाः ) [ ई० १९६०

मूल्य ०-५०

# निवेदन

यह ग्रन्थ छोटा होने पर भी अत्यन्त उपयोगी है। इसमें जन-साधारण के कार्य के लिए बहुत परिश्रम से मुहूर्तों का संग्रह एकत्र करके रखा गया है। केवल इसी छोटी सी पुस्तक के पढ़ने से पाठक को व्यावहारिक यात्रा आदि मुहूर्त, इष्ट लग्न और कन्या-वर का मेलापक सम्बन्धी समस्त विचारों का ज्ञान तुरन्त हो जायगा। इसके प्रत्येक श्लोकों की व्याख्या भी सरल हिन्दी भाषा में कर दी गई है और जगह २ पर उदाहरणों से भी अर्थ को स्पष्टरूप से समझाया गया है तथा अन्त में वधू-वर मेलापक के अनेक चक्र अलग-अलग दिये गये हैं, जिससे पाठक गण भली भाँति आचार्यों का आशय समझ लेंगे।

विद्वज्जनानुचर—

**श्री मुरलीधर ठक्कुर**

॥ श्रीः ॥

# शतपदचक्रविवरणम्

वा

# मुहूर्तसंग्रहः



नत्वा शिवं शिवां देवीं गणाधीशं तथा गुरुम् ।
मुहूर्तसंग्रहैर्युक्तं होडाचक्रं निरूप्यते ॥ १ ॥

तत्रादौ तावत्तिथीनां नामानि—

प्रतिपद् द्वितीया चैव तृतीया तदनन्तरम् ।
चतुर्थी पञ्चमी चैव षष्ठी चैव ततः परम् ॥
सप्तमी चाष्टमी चैव नवमी दशमी तथा ।
ततश्चैकादशी ज्ञेया द्वादशी च त्रयोदशी ॥
ततश्चतुर्दशी प्रोक्ता कृष्णान्तेऽमा प्रकीर्त्तिता ।
पूर्णिमा शुक्लपक्षान्ते तिथयः कथिता बुधैः ॥

प्रतिपद्, द्वितीया, तृतीया, चतुर्थी, पञ्चमी, षष्ठी, सप्तमी, अष्टमी, नवमी, दशमी, एकादशी, द्वादशी, त्रयोदशी, चतुर्दशी, कृष्णपक्षमें अमावास्या और शुक्लपक्षमें पूर्णिमा इस प्रकार तिथियों की संख्या पण्डितों ने कही है ।

अथ तिथीनां स्वामिनो नामानि—

तिथीशा वह्निकौ गौरी गणेशोऽहिर्गुहो रविः ।
शिवो दुर्गाऽन्तको विश्वे हरिः कामः शिवः शशी ॥

वह्नि ( अग्नि ), क ( ब्रह्मा ), गौरी ( पार्वती ), गणेश, अहि ( सर्प ), गुह ( कार्तिकेय ), रवि, शिव, दुर्गा, अन्तक ( यमराज ), विश्वेदेव, हरि, काम, शिव और शशि ( चन्द्रमा ) ये क्रमशः प्रतिपदादि तिथियों के स्वामी हैं ।

अर्थात् प्रतिपद् का स्वामी अग्नि, द्वितीया का ब्रह्मा, तृतीया का पार्वती, चतुर्थी का गणेश, पंचमी का सर्प, षष्ठी का कार्तिकेय, सप्तमी का रवि, अष्टमी

का शिव, नवमी का दुर्गा, दशमी का यमराज, एकादशी का विश्वेदेव, द्वादशी का हरि ( विष्णु ), त्रयोदशी का कामदेव, चतुर्दशी का शिव और पंचदशी का स्वामी चन्द्रमा हैं। [ जिन तिथियों की जो देवता हैं, उनकी पूजा उन्हीं तिथियों में की जाती है। ]

अथ नक्षत्रनामानि—

अश्विनी भरणी चैव कृत्तिका रोहिणी तथा।
मृगशीर्षस्तथाऽऽर्द्रा च पुनर्वसुरतः परम्॥
पुष्याश्लेषामघाप्रोक्ताः पूर्वाचोत्तरफाल्गुनी।
हस्तश्चित्रा तथा स्वाती विशाखा तदनन्तरम्॥
अनुराधा तथा ज्येष्ठा मूलभं च ततः परम्।
पूर्वाषाढोत्तराषाढाऽभिजिच्च श्रवणं ततः॥
धनिष्ठा च ततो ज्ञेया शततारा ततः परम्।
पूर्वाभाद्रपदा प्रोक्ता ततश्चोत्तरभाद्रकम्॥
रेवती चेति भानां हि नामानि कथितानि वै।
सप्तविंशति संख्यानां सदसत्फलहेतवे॥

अश्विनी, भरणी, कृत्तिका, रोहिणी, मृगशीर्ष, आर्द्रा, पुनर्वसु, पुष्य, आश्लेषा, मघा, पूर्वाफाल्गुनी, उत्तराफाल्गुनी, हस्त, चित्रा, स्वाती, विशाखा, अनुराधा, ज्येष्ठा, मूल, पूर्वाषाढ़ा, उत्तराषाढ़ा, अभिजित्, श्रवण, धनिष्ठा, शतभिषा, पूर्वाभाद्रपदा, उत्तराभाद्रपदा और रेवती ये २८ नक्षत्र कहे गये हैं। पर मूल में २७ नक्षत्रों का ही नाम आया है, इसका कारण यह है कि उत्तराभाद्रपदा का अन्तिम चतुर्थांश और श्रवण का प्रथम पंचदशांश मिलकर अभिजित् का मान है। इसलिये अभिजित् की गणना अलग नहीं होती है।

संहिताग्रन्थों में तो नक्षत्रों का अलग-अलग भोग बताया गया है। उसमें सब नक्षत्रों का भोग का योग चक्रकला में २१६०० घटाकर शेष अभिजित् का भोग माना है।

अथ नक्षत्रदेवताः—

अश्विनावन्तको वह्निस्ततो धाता निशाकरः।
रुद्रोऽदितिर्गुरुः सर्पः पितरो भग एव च॥
अर्यमा च रविस्त्वष्टा वायुर्वह्निपुरन्दरौ।

मित्रः शक्रश्च निर्ऋतिः सलिलं च ततः परम् ॥
विश्वेदेवा विधिर्विष्णुर्वसवो वरुणस्ततः ।
ततोऽजपादहिर्बुध्न्यः पूषा नक्षत्रदेवताः ॥

अश्विनी का स्वामी अश्विनीकुमार, भरणी का यम, कृत्तिका का अग्नि, रोहिणी का ब्रह्मा, मृगशिर्ष का चन्द्रमा, आर्द्रा का रुद्र, पुनर्वसु का अदिति, पुष्य का बृहस्पति, आश्लेषा का सर्प, मघा का पितर, पूर्वाफल्गुनी का भग ( सूर्य विशेष ), उत्तराफल्गुनी का अर्यमा ( सूर्य विशेष ), हस्त का रवि, चित्रा का त्वष्टा (विश्वकर्मा), स्वाती का वायु, विशाखा का अग्नि और इन्द्र, अनुराधा का मित्र ( सूर्य विशेष ), ज्येष्ठा का इन्द्र, मूल का निर्ऋति ( राक्षस ), पूर्वाषाढ़ा का जल । उत्तराषाढ़ा का विश्वेदेव, अभिजित् का ब्रह्मा, श्रवण का विष्णु, धनिष्ठा का अष्टवसु, शतभिषा का वरुण, पूर्वाभाद्रपदा का अहिर्बुध्न्य ( सूर्य विशेष ), रेवती का पूषा ( सूर्य विशेष ) इस प्रकार अश्विन्यादि नक्षत्रों के देवता कहे गये हैं । जिन नक्षत्रों के जो देवता हैं उन देवताओं से भी उन नक्षत्रों का ज्ञान होता है । जैसे—रुद्र से आर्द्रा, विष्णु से श्रवण, अजपाद् से पूर्वाभाद्रपदा इत्यादि ।

अथ योगनामानि—

विष्कम्भः प्रीतिरायुष्मान् सौभाग्यः शोभनस्ततः ।
अतिगण्डः सुकर्मा च धृतिः शूलस्तथैव च ॥
गण्डो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा ।
वज्रः सिद्धिर्व्यतीपातो वरीयान् परिघः शिवः ॥
सिद्धिः साध्यः शुभः शुक्लो ब्रह्मैन्द्रौ वैधृतिस्ततः ।
क्रमादेता योगसंख्याः सप्तविंशति कीर्तिताः ॥

विष्कम्भ, प्रीति, आयुष्मान् , सौभाग्य, शोभन, अतिगण्ड, सुकर्मा, धृति, शूल, गण्ड, वृद्धि, ध्रुव, व्याघात, हर्षण, वज्र, सिद्धि, व्यतीपात, वरीयान् , परिघ, शिव, सिद्धि, साध्य, शुभ, शुक्ल, ब्रह्मा, ऐन्द्र और वैधृति ये सत्ताइस योग शास्त्र में कथित हैं ।

अथ वारनामानि—

रविः सोमस्तथा भौमो बुधो गीष्पतिरेव च ।
शुक्रः शनैश्चरश्चैव वाराः सप्त प्रकीर्तिताः ॥

रवि, सोम, मंगल, बुध, बृहस्पति, शुक्र, एवं शनैश्चर ये सात वार क्रम से हैं ।

अथ तिथीनां नन्दादिसंज्ञा:—

नन्दा भद्रा जया रिक्ता पूर्णा च तिथयः क्रमात् ।
वारत्रयं समावृत्य भवन्ति प्रतिपन्मुखाः ।।

नन्दा—१—६—११ भद्रा—२—७—१२
जया—३—८—१३ रिक्ता—४—९—१४
पूर्णा—५—१०—१५

अथ सिद्धियोगाः—

शुक्रे नन्दा बुधे भद्रा जया क्षितिजनन्दने ।
शनौ रिक्ता गुरौ पूर्णा सिद्धियोगाः प्रकीर्तिताः ।।

शुक्र दिन नन्दा १।६।११, बुध दिन भद्रा २।७।१२, मंगल दिन जया ३।८।१३, शनि दिन रिक्ता ४।९।१४ और बृहस्पति दिन पूर्णा ५।१०।१५ सिद्धियोग हैं। ये यात्रा के लिए प्रशस्त हैं।

अथ मृत्युयोगाः—

आदित्यभौमयोर्नन्दा भद्रा भार्गवचन्द्रयोः ।
बुधे जया गुरौ रिक्ता शनौ पूर्णा च मृत्युदा ।।

रवि और मङ्गल को नन्दा ( १।६।११ ) शुक्र और सोम को भद्रा ( २।७।१२ ), बुध को जया ( ३।८।१३ ), बृहस्पति को रिक्ता ( ४।९।१४ ) और शनि को पूर्णा ( ५।१०।१५ ) मृत्युयोग है। इसमें यात्रा नहीं करनी चाहिये।

अथ अमृतयोगाः—

चन्द्रार्कयोर्भवेत् पूर्णा कुजे भद्रा जया गुरौ ।
शनिचन्द्रजयोर्नन्दा भृगौ रिक्ताऽमृताह्वया ।।

रवि और सोम दिन पूर्णा ( ५।१०।१५ ), मङ्गल दिन भद्रा ( २।७।१२ ) बृहस्पति दिन जया ( ३।८।१३ ), शनि और बुध दिन नन्दा ( १।६।११ ) और शुक्र दिन रिक्ता ( ४।९।१४ ) अमृतयोग हैं। यह यात्रा के लिए मङ्गलदायक है।

अथ राशीनां नामानि—

मेषो वृषोऽथ मिथुनं कर्कः सिंहश्च कन्यका ।
तौलिश्च वृश्चिकश्चैव धनुर्मकर एव च ।

कुम्भमीनौ क्रमादेते राशयः परिकीर्तिताः ॥

मेष, वृष, मिथुन, कर्क, सिंह, कन्या, तुला, वृश्चिक, धनु, मकर, कुम्भ और मीन ये बारह राशियाँ हैं।

अथ तिथिदग्धयोगाः—

द्वादशी रविवारे च सोमे चैकादशी तथा।
भौमे तथैव दशमी तृतीया बुधवासरे॥
षष्ठी गुरौ तथा शुक्रे द्वितीया सप्तमी शनौ।
दग्धयोगा बुधैः प्रोक्ताः सर्वकर्मणि वर्जिताः॥

रवि को द्वादशी, सोम को एकादशी, मङ्गल को दशमी, बुध को तृतीया, बृहस्पति को षष्ठी, शुक्र को द्वितीया और शनि को सप्तमी दग्ध है। अतः यह शुभकर्म में त्याज्य है। रामाचार्य के मत से मङ्गल को पंचमी, शुक्र को अष्टमी और शनि को नवमी (१) दग्ध है।

अथ मासदग्धतिथयः—

चापे मीने द्वितीया च चतुर्थी वृषकुम्भयोः।
षष्ठी मेषे कुलीराख्ये कन्यायुग्मे तथाऽष्टमी॥
दशमी वृश्चिके सिंहे द्वादशी मकरे तुले।
एतास्तु तिथयो दग्धाः शुभे कर्मणि वर्जिताः॥

धनु और मीन संक्रान्त्युपलक्षित मास ( पूस, चैत ) की द्वितीया, वृष-कुम्भ ( ज्येष्ठ, फाल्गुन ) की चतुर्थी, मेष-कर्क ( वैशाख, श्रावण ) की षष्ठी, कन्या-मिथुन ( आश्विन, आषाढ़ ) की अष्टमी, वृश्चिक-सिंह ( भाद्र, अग्रहण ) की दशमी और मकर-तुला ( माघ, कार्तिक ) की द्वादशी दग्ध है। इसलिए शुभ कार्यों में वर्जित है।

अथ दिनार्धप्रहरविचारः—

रवौ वर्ज्याश्चतुःपञ्च सोमे सप्तद्वयं तथा।
कुजे षष्ठद्वयं चैव बुधे बाणतृतीयकम्॥
गुरौ सप्ताष्टकं चैव शुक्रे वेदतृतीयकौ।

---

( १ ) शनि को नवमी सिद्धियोग है, इसलिये शुभ है। परञ्च यहाँ दग्ध होने के कारण त्याज्य है। इस विरोध के परिहार में पीयूषधाराकार लिखते हैं कि शनि को नवमीसिद्ध-रिक्ता सिद्धियोग है।

शनावाद्यन्तषष्ठं च प्रहरार्धं विगर्हितम् ॥

चार प्रहर का दिन होता है। एक-एक प्रहर के दो भाग करने से एक दिन में आठ अर्धप्रहर होते हैं अर्थात् दिनमान के आठ भाग करने से प्रथम भाग को प्रथम अर्धप्रहर, दूसरे भाग को द्वितीय अर्धप्रहर इत्यादि कहा जाता है, जिसमें—

| | | | | | | |
|---|---|---|---|---|---|---|
| रविवार | का | ४, ५ | सोमवार | का | २, ७ |
| मङ्गल | ,, | २, ६ | बुध | ,, | ३, ५ |
| बृहस्पति | ,, | ७, ८ | शुक्र | ,, | ३, ४ |
| शनि | ,, | १, ६, ८ | ये अर्धप्रहर हैं। | | |

ये यात्रादि मङ्गल कार्यों में वर्जित हैं।

अथ रात्रावर्धप्रहरविचारः—

रवौ रसाब्धी हिमगौ हयाब्धी द्वयं महीजे शशिजे शराद्री।
गुरौ शराष्टौ भृगुजे तृतीयं शनौ रसाद्यन्तमिति क्षपायाम् ॥

रवि का ६।४, सोम का ७।४, मङ्गल का २, बुध का ५।७, बृहस्पति का ५।८ शुक्र का ३ और शनि का ६।१।८ रात्रि का अर्धप्रहर शुभकार्यों में वर्जित है।

अथ रव्यादिवारे शून्यनक्षत्राणि—

रवौ मघानुराधा च सोमे वैश्वद्विदैवते।
भौमे शतभिषाद्रा च बुधे मूलाश्विनी तथा ॥
मृगो वह्निः सुराचार्ये शुक्रेऽश्लेषा च रोहिणी।
शनौ हस्तश्च पूषा च सर्वकर्मणि निन्दिताः ॥

रवि को मघा-अनुराधा, सोम को विशाखा-उत्तराषाढ़ा, मङ्गल को आर्द्रा-शतभिषा, बुध को मूल-अश्विनी, बृहस्पति को कृत्तिका-मृगशिरा, शुक्र को रोहिणी-आश्लेषा और शनि को हस्त तथा रेवती शून्य हैं। ये सब शुभकार्य में त्याज्य हैं।

अथ आनन्दाद्यष्टाविंशतियोगाः—

आनन्दः कालदण्डश्च धूम्रो धाता तथैव च।
सौम्यो ध्वांक्षश्च केतुश्च श्रीवत्सो वज्रकं तथा ॥
मुद्गरश्छत्रमित्रे च मानसं पद्मलुम्बकौ।
उत्पातश्च तथा मृत्युः काणः सिद्धिः शुभोऽमृतः ॥

मुसलं गदमातङ्गौ राक्षसाख्यश्चरः स्थिरः ।
प्रवर्धमान एते स्युर्योगा नामसदृक्फलाः ॥

आनन्द, कालदण्ड, धूम्र, धाता, सौम्य, ध्वाङ्क्ष, केतु, श्रीवत्स, वज्र, मुद्गर, छत्र, मित्र, मानस, पद्म, लुम्ब, उत्पात, मृत्यु, काण, सिद्धि, शुभ, अमृत, मुसल, गद, मातङ्ग, राक्षस, चर, स्थिर और प्रवर्धमान ये २८ योग यात्रा में विशेष विचारणीय हैं ।

अथ आनन्दादियोगानां गणनाप्रकारः—

दास्राद्र्के मृगादिन्दौ सार्पाद्भौमे कराद् बुधे ।
मैत्राद्गुरौ भृगौ वैश्वाद् गण्या मन्दे च वारुणात् ॥

रविवार को अश्विनी नक्षत्र से, सोम को मृगशिरा से, मङ्गल को आश्लेषा से, बुध को हस्त से, बृहस्पति को अनुराधा से, शुक्र को उत्तराषाढ़ा से और शनि को शतभिषा से इष्ट नक्षत्र की संख्या गणना करके आनन्दादियोग मालूम करना चाहिये ।

जैसे—बृहस्पति के दिन रेवती नक्षत्र है तो उस दिन कौन योग होगा यह जानने के लिए उपर्युक्त क्रमानुसार अनुराधा से रेवती तक १२ संख्या हुई । इसलिए आनन्द से लेकर बारहवीं संख्या मित्र की है, अतएव मित्र योग हुआ । इसका फल भी उत्तम है । इसमें यात्रा शुभ है । इसी प्रकार और भी समझना चाहिये ।

अथ गर्भाधानम्—

स्त्रीणामृतुर्भवति षोडशवासराणि
तत्रादितः परिहरेच्च निशाश्चतस्रः ॥
युग्मासु रात्रिषु नरा विषमासु नार्यः
कुर्यान्निषेकमथ तेष्वपि पर्ववर्ज्यम् ॥

स्त्रियों के गर्भाधन में रजोदर्शन के दिन से सोलह दिन तक गर्भाधान का समय है । जिसमें प्रथम चार रात्रि छोड़कर शेष बारह दिन के भीतर विषम रात्रि ५-७-९ इत्यादि में सहवास करने से कन्या और सम रात्रि ६-८-१० इत्यादि में सहवास करने से पुत्र होता है । किन्तु इसके भीतर पर्वदिन में सहवास का निषेध है ।

पर्वाणि यथा—

चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥

चतुर्दशी, अष्टमी, अमावास्या, पूर्णिमा और संक्रान्ति ये पर्व के दिन हैं ।

अथ गर्भाधाने विहितनक्षत्राणि—

हरिहस्तानुराधोश्च स्वातीवरुणवासवम् ।
त्रीण्युत्तराणि मूलं च रोहिणी चोत्तमा स्मृता ॥
चित्रादैत्येन्द्र वा तिष्य तुरगं च भमध्यमम् ।
शेषभान्यधमान्याहुर्वर्जनीया निषेकके ॥

श्रवणा, हस्त, अनुराधा, स्वाती, शतभिषा, धनिष्ठा, उत्तरफाल्गुनी, उत्तराषाढ़ा, उत्तराभाद्रपदा, मूल और रोहिणी ये नक्षत्र गर्भाधान में उत्तम हैं । चित्रा, पुनर्वसु, पुष्य और अश्विनी ये नक्षत्र गर्भाधान के लिए मध्यम कहे गये हैं और शेष नक्षत्र वर्जित हैं ।

अथ गर्भाधाने विहिततिथयः—

नन्दा भद्रा स्मृता पुंसि स्त्रीषु पूर्णा जया स्मृता ।
रिक्ता नपुंसके ज्ञेया तस्मात्तां परिवर्जयेत् ॥

नन्दा तथा भद्रा तिथि पुरुष संज्ञक हैं । जया और पूर्णा स्त्री संज्ञक हैं । रिक्ता नपुंसक है । पुरुष और स्त्री संज्ञक तिथि में गर्भाधान शुभ है और नपुंसक संज्ञक में वर्जित है ।

अथ गर्भाधाने विहितदिनानि—

वासराः पुत्रदाः प्रोक्ताः कुजार्कगुरवो ध्रुवम् ।
कन्यादौ भृगुशीतांशू क्लीबदौ शनिचन्द्रजौ ॥

बृहस्पति, रवि और मङ्गल इन दिनों में गर्भाधान से पुत्र होता है, और शुक्र, एवं सोम में कन्या तथा शनि और बुध में नपुंसक होता है ।

अथ पुंसवनम्—

मासे द्वितीयेऽप्यथवा तृतीये पुन्नामधेये ग्रहऋक्षचक्रे ।
अक्षीणचन्द्रे कुजभानुजीवे वारे शुभं पुंसवनादि कर्म ॥

दूसरे या तीसरे महीनों में, पुरुषसंज्ञक नक्षत्रों में, शुक्ल पक्ष तथा सोम, मङ्गल, रवि, और बृहस्पति इन दिनों में पुंसवन कर्म शुभ है ।

अन्यच्च—

नन्दाभद्रार्कजीवे कुजशशिपवने मैत्रमूले मृगेऽश्वे।
पौष्णादित्यां तु पुष्ये श्रुतित्रयपितरे तारकाचन्द्रशुद्धे॥
लग्ने कन्यालिकर्के हरिझषसहिते क्रूरगोत्रायषष्ठे।
सौम्याः केन्द्रत्रिकोणे शुभदिनसहिते कारयेत्पुंसकर्म॥

नन्दा और भद्रा तिथि हो एवं रवि, बृहस्पति, मंगल और सोम दिन हों तथा स्वाती, अनुराधा, मूल, मृगशिरा, अश्विनी, रेवती, पुनर्वसु, पुष्य, श्रवण, धनिष्ठा, शतभिषा और मघा इन नक्षत्रों में चन्द्र, और तारा अनुकूल हो एवं कन्या, वृश्चिक, कर्क, सिंह और मीन लग्न में हो और पापग्रह तीसरे छठे और ग्यारहवें में हों, तथा शुभग्रह नवें पांचवें या केन्द्र में हों तो पुंसवन कर्म करना शुभ है।

अथ सीमन्तकर्म—

मासेशे प्रबले शुभेक्षितविधौ मासेऽथ षष्ठेऽष्टमे
मैत्रे पुंसवनोदितर्क्षसहिते रिक्ताविहीने तिथौ।
सीमन्तोन्नयनं मृगाजरहिते लग्ने नवांशोदये
योज्यं पुंसवनोदितं यदपरं तत्सर्वमत्रापि च॥

मासेश ( मासस्वामी ) बली हो चन्द्रमा शुभग्रह से देखे जाते हों, छठे और आठवें महीने में, पुंसवन में कहे हुए नक्षत्रों सहित मैत्र संज्ञक नक्षत्रों में, रिक्ता वर्जित तिथि में, मेष-मकर से रहित अन्य लग्न के नवांश उदय हों और शेष विधि पुंसवन में कहे हुये विचार कर सीमन्तकर्म करना शुभ होता है।

अथ सूतिकागृहनिर्माणकालः—

प्रसवाथ गृहं कुर्याद् आदित्यादि शुभे दिने।
रोहिण्यां श्रवणायां च प्रवेशस्तत्र कीर्त्तितः॥

सूतिका के सुखप्रसवार्थ सूर्यादि शुभ दिनों में गृह बनवाना शुभ है। तथा रोहिणी और श्रवण में प्रवेश करना शुभ है।

अथ शिशोर्मातुः स्तन्यपानविचारः—

पुनर्वसौ पुष्यमघासु मूले त्रिरुत्तरा चैव विशाखिकासु।
वारेऽर्कजीवे बुधशुक्रचन्द्रे स्तन्यप्रदानं शुभदं शिशूनाम्॥

पुनर्वसु, पुष्य, मघा, मूल, उत्तराफाल्गुनी, उत्तराषाढा, उत्तरभाद्र और विशाखा इन नक्षत्रों में, रवि, सोम, बुध, बृहस्पति और शुक्र इन दिनों में, रिक्ता (४।९।१४) वर्जित तिथि में बालक को अपनी माता को प्रथम बार स्तनपान करना शुभ है।

अथ सूतीस्नानम्—

करेन्द्रभाग्यानिलवासवान्त्यमैत्रध्रुवाश्विध्रुवभेऽह्नि पुंसाम् ।
तिथावरिक्ते शुभमामनन्ति प्रसूतिकास्नानविधौ मुनीन्द्राः ॥
स्नाता प्रसूताप्यसुता बुधे च स्नाता च वन्ध्या भृगुनन्दने च ।
सौरे च मृत्युः पयहानिरिन्दौ पुत्रार्थलाभो रविभौमजीवे ॥

हस्त, ज्येष्ठा, पूर्वाफाल्गुनी, स्वाती, धनिष्ठा, रेवती, और मैत्रसंज्ञक एवं ध्रुवसंज्ञक नक्षत्रों में तथा ध्रुवसंज्ञक नक्षत्रोक्त दिन में, एवं रिक्ता वर्जित तिथि में, बालक सहित प्रसूती को स्नान करना मुनि लोग शुभ कहे हैं ।

बुधवार में स्नान करने से प्रसूता स्त्री असुता (पुत्र रहित) हो जाती है, शुक्रवारमें स्नान करसे से वन्ध्या (मृतवन्ध्या) होती है, शनिवार में स्नान मृत्यु कारक होता है, सोमवार में स्नान करने से स्तन्य ( दूध ) का नाश होता है तथा रवि, मङ्गल, और गुरुवारमें स्नान करने से पुत्र, धन, और इच्छित वस्तु प्राप्त होती है ।

अथ प्रसूतिशुद्धदिवसाः—

गावश्च महिषी चैव अजाश्च ब्राह्मणी तथा ।
दशाहेनैव शुद्ध्यन्ति प्रसूतिः स्याद् यदा तदा ॥

गौ, महिषी, बकरी, भेंड़ी और ब्राह्मणी ये सब प्रसूति होने पर दशदिन के बाद शुद्ध होती हैं ।

अथ नामकरणम्—

वस्वादित्यगुरूत्तरादितिमृगैश्चित्राऽनुराधानिलैः
मूलावैष्णवरेवतीन्दुतुरगैः संज्ञां प्रकुर्याच्छिशोः ।
वारेऽहर्पतिचन्द्रवाक्पतिबुधे लग्ने गुरौ शोभने
सौम्यैः केन्द्रनवात्मजन्मसहितैः पापैश्च शेषस्थितैः ॥

धनिष्ठा, पुनर्वसु, पुष्य, तीनों उत्तरा, ( उत्तराफाल्गुनी, उत्तराभाद्रपदा, उत्तराषाढा ) हस्त, मृगशिरा, चित्रा, अनुराधा, स्वाती, मूल, श्रवण, रेवती, ज्येष्ठा और अश्विनी इन नक्षत्रों में रवि, सोम, बुध और बृहस्पति दिनों में शुभ लग्नस्थ बृहस्पति हों और शुभग्रह १. ४. ७. १०. ९. ५. इन स्थानों में हों या जन्म राशि में शुभग्रह हों, पाप ग्रह शेष स्थान में हों तो नामकरण शुभ है ।

अथ दोलारोहणम्—

धृति-भूपार्कपदंदन्त-प्रमिते शुभवासरे ।

मृदु-ध्रुव-क्षिप्र-चरे सद्वारे सत्तिथौ सुधीः ॥

जन्म दिवस से क्रमशः धृति १८ भूप १६ अर्क १२ दिग् १० दन्त ३२ इन दिनों में एवं शुभ दिन में मृदु, चर, ध्रुव और क्षिप्र संज्ञक नक्षत्रों में. तथा शुभ तिथि युक्त मुहूर्त में दोलारोहण बालक के लिये शुभ है ।

अथ खट्वारोहणम्—

अभीष्टपुण्ये दिवसे चन्द्रताराबलान्विते ।
मृदुध्रुवक्षिप्रभेषु स्वमाता कुलयोषितः ॥
योगशायिं हरिं स्मृत्वा प्राक्शीर्षं विन्यसेच्छिशुम् ॥

अभीष्ट पुण्य दिवस में चन्द्र तारानुकूल होने पर मृदु, ध्रुव, और क्षिप्र संज्ञक नक्षत्रों में अपनी माता या अपनी वंश के कोई श्रेष्ठ वर्ग की स्त्री योगशायी भगवान् का स्मरण करके बालक को पूर्व शिरहाने सुलावे ।

अथ निष्क्रमणम्—

आर्द्राऽधोमुखवर्जितानुपहतर्क्षे वाप्यरिक्ते तिथौ
वारे भौमशनीतरे घटतुलासिंहालिकन्योदये ।
सद्दृष्टेऽथ चतुर्थमासि यदि वा मासे तृतीये शशि-
न्यक्षीणे शुभदं शिशोरथ गृहान्निष्कासनं कारयेत् ॥

आर्द्रा, अधोमुख और सूर्य किरण से हत नक्षत्रों से रहित नक्षत्रों में, रिक्ता वर्जित तिथि और मङ्गल तथा शनि रहित दिनों में कुम्भ, तुला, सिंह, वृश्चिक और कन्या लग्नों में शुभग्रह की इष्टि हो, तीसरे और चौथे महीने में, शुक्ल पक्ष में बालक को प्रथमतः बाहर निकालना शुभ है ।

अथ भूम्युपवेशनम्—

पृथ्वीं वराहं विधिवत्प्रपूज्य शुद्धे कुजे पञ्चममासि बालम् ।
क्षिप्रध्रुवे सत्तिथिवासराद्ये निवेशयेत्कौ कटिसूत्रबद्धम् ॥

पृथ्वी और वराहरूप भगवान् की विधिवत् पूजा करके, मङ्गल शुद्ध हो, पांचवें महीने में क्षिप्र और ध्रुव संज्ञक नक्षत्रों में शुभ तिथि और शुभ दिन में बालक को कटि सूत्र ( कमर बन्द ) कमर में बांध कर पृथ्वी पर बैठाना शुभ है ।

अथ शिशुविलोकनम्—

तृतीये मासि यात्रोक्ततिथावह्नयर्कचन्द्रयोः ।
वारे च कुलरीत्या वा शुभे शिशुविलोकनम् ॥

तीसरे महीने में और यात्रा में कहे हुए तिथि नक्षत्रों में, रवि, सोम दिनमें, अपने कुलाचार के अनुसार बालक को प्रथम वार देखना शुभ है।

अथ दन्तोत्पत्तिकथनम्—

जन्मतः पञ्चमासेषु दन्तोत्पत्तिर्न शोभना।
शुभा षष्ठादिके ज्ञेया न सदन्तजनिः शुभा॥

जन्म से पाँचवें महीने तक बालक को दाँत होना अशुभ है और छठे आदि महीने से शुभ है। तथा दाँत के सहित बालक का जन्म होना शुभ नहीं है।

अथ अन्नप्राशनम्—

रेवत्यश्विपुनर्वसूहरियुगब्राह्मानुराधागुरु-
स्वातीभानुमघाविशाखरजनीनाथोत्तरात्वाष्ट्रभे।
वारे सूर्यशशांकबोधनगुरौ शुक्रेप्यरिक्ते तिथा-
वन्नप्राशनमीरितं मिथुनगोकन्याझषे सूरिभिः॥

रेवती, अश्विनी, पुनर्वसु, श्रवण, धनिष्ठा, रोहिणी, अनुराधा, पुष्य, स्वाती, हस्त, मघा, विशाखा, मृगशिरा, तीनों उत्तरा और चित्रा इन नक्षत्रों में तथा रवि, सोम, बुध, गुरु और शुक्र इन दिनों में तथा रिक्ता वर्जित तिथि में एवं मिथुन, वृष, कन्या और मीन लग्नों में मुनियों ने अन्नप्राशन शुभ कहा है।

अथ ताम्बुलभक्षणमुहूर्तः—

मूलाश्विमित्रकरपुष्यहरीन्दुपूषा चित्रोत्तरापवनशक्रपुनर्वसौ च।
वारे रवीन्दुगुरुबोधनभार्गवाणां ताम्बूलभक्षणविधिः शुभदः शिशूनाम्॥

मूल, अश्विनी, अनुराधा, हस्त, पुष्य, मृगशिरा, रेवती, चित्रा, तीनों उत्तरा, स्वाती, ज्येष्ठा और पुनर्वसु इन नक्षत्रों में रवि, सोम, बृहस्पति, बुध, और शुक्र दिनों में बालक को पान खिलाना शुभ है।

अथ चूडाकरणम्। तत्र समयनियमः—

न जन्ममासे न च जन्मभे तथा विधौ विरुद्धे शततारकासु।
युग्माब्दमासे न च कृष्णपक्षे चूडा न कार्या खलु चैत्रमासे॥

जन्ममास, जन्मनक्षत्र तथा विरुद्ध चन्द्र, शतभिषा व सम वर्ष जैसे २,४,६,८, इत्यादि, सम महीना, कृष्ण पक्ष और चैत्रमास ये सब चूड़ाकरण में वर्जित हैं।

अथ चूड़ाकरण मुहूर्त्तः—

पौष्णाश्वितिष्यवसुवासववासुदेववातेंदुचन्द्रवरुणादितिचित्रभेषु।

चारेषु सोमबुधवाक्पतिभार्गवाणां क्षौरं हितं शुभफलं शुभतारकासु ॥

रेवती, अश्विनी, पुष्य, धनिष्ठा, श्रवण, ज्येष्ठा, स्वाती, हस्त, मृगशिरा, शतभिषा पुनर्वसु और चित्रा इन नक्षत्रों में, सोम, बुध, बृहस्पति और शुक्र दिनों में शुभ तारा हो तो चूड़ाकरण शुभ होता है ।

अथ कर्णवेधः—

हस्तादितिश्रवणमैत्रभवासवेषु पुष्याश्विितिष्यमरुदिन्दुसचित्रभानि ।
श्रेष्ठानि मूलवरुणात्मजभानि पूर्वात्रीण्युत्तरात्रितयभानि भनिन्दितानि ॥

हस्त, पुनर्वसु, श्रवण, अनुराधा, धनिष्ठा, पुष्य, अश्विनी, रेवती, स्वाती, मृगशिरा, और चित्रा ये नक्षत्र कर्णवेध में श्रेष्ठ हैं और मूल, शतभिषा, तीनों पूर्वा और तीनों उत्तरा कर्णवेध में वर्जित हैं ।

अथ अक्षरारम्भः—

हस्तादित्यसमीरमित्रपुरजित् पौष्णाश्विचित्राच्युते
चारार्कांशदिनोदयादिरहिते चांशौ स्थिते चोभये ।
पक्षे पूर्णनिशाकरे प्रतिपदं रिक्तां विहायाष्टमीं
षष्ठीमष्टमभाजि शुद्धभवने प्रोक्ताऽक्षरस्वीकृतिः ॥

हस्त, पुनर्वसु, स्वाती, अनुराधा, आर्द्रा, रेवती, अश्विनी, चित्रा और श्रवण इन नक्षत्रों में मङ्गल और सूर्य के नवांश रहित लग्न में तथा सूर्य और मङ्गल को छोड़कर शेष दिनों में शुक्लपक्ष में, प्रतिपद्, रिक्ता, षष्ठी और अष्टमी रहित तिथि में अष्टम भवन शुद्ध हो तो बालक को अक्षरारम्भ कराना शुभ है ।

अथ विद्यारम्भः—

विद्यारम्भः सुरगुरुसितज्ञेष्वभीष्टप्रदाता
कर्तुश्चायुश्चिरमपि करोत्यंशुमान्मध्यमोऽत्र ।
नीहारांशौ भवति जडता पञ्चता भूमिपुत्रे
छायासूनावपि च मुनयः कीर्त्तयन्त्येवमाद्याः ॥

हस्ताश्वियुक्श्रवणचित्रसमीरमित्रपुष्यादितीन्दुनिर्ऋतिवसुवारुणेषु ।
पूर्वोत्तराकमलसम्भवपौष्णभेषु विद्या श्रुतिस्मृतिमुखा कथिता द्विजानाम् ॥

बृहस्पति, शुक्र और बुध इन दिनों में विद्यारम्भ अभीष्ट देने वाला और आयु की वृद्धि करने वाला होता है । रविवार में मध्यम है, और सोमवार को जड़ता तथा मङ्गल और शनिवार को विद्यारम्भ मृत्यु देता है

पुष्य, पुनर्वसु, मृगशिरा, हस्त, अश्विनी, श्रवण, चित्रा, स्वाती, अनुराधा, मूल, धनिष्ठा, शतभिषा, तीनों पूर्वा, तीनों उत्तरा, रोहिणी और रेवती इन नक्षत्रों में विद्यारम्भ ब्राह्मण, क्षत्रिय और वैश्यों के लिये श्रेष्ठ कहा गया है।

अथ उपनयनमुहूर्तः—

पूर्वाषाढहरित्रयेऽश्विमृगभे हस्तत्रये रेवती-
ज्येष्ठापुष्यभगेषु चोत्तरगते भानौ च पक्षे सिते।
गोमीनौ प्रमदाधनुर्वनचरे शुक्रार्कजीवेन्दुजे
पञ्चम्यां दशमीत्रये व्रतमिह श्रेष्ठं द्वितीयाद्वयम्॥

पूर्वाषाढा, श्रवण, धनिष्ठा, शतभिषा, अश्विनी, मृगशिरा, हस्त, चित्रा, स्वाती, रेवती, ज्येष्ठा, पुष्य, और पूर्वाफाल्गुनी, इन नक्षत्रों में सूर्य के उत्तरायण रहने पर और शुक्ल पक्षमें, वृष, मीन, कन्या, मेष, सिंह, और धनु इन लग्नों में, शुक्र, रवि, बृहस्पति और बुध दिनों में, पञ्चमी, दशमी, एकादशी, द्वादशी द्वितीया और तृतीया तिथि में व्रतबन्ध ( उपनयन ) श्रेष्ठ है।

अथ उपनयने वर्षशुद्धिः—

विप्राणां व्रतबन्धनं निगदितं गर्भाज्जनेर्वाष्टमे
वर्षे वाप्यथ पञ्चमे क्षितिभुजां षष्ठे तथैकादशे।
वैश्यानां पुनरष्टमेऽप्यथ पुनः स्याद् द्वादशे वत्सरे
कालेऽथ द्विगुणे गते निगदिते गौणं तदाऽहुर्बुधाः॥

ब्राह्मणों के लिये गर्भ से या जन्म से आठवें और पांचवें वर्ष में, क्षत्रियों के लिये गर्भ से या जन्म से छठे और ग्यारहवें वर्ष में, एवं वैश्य के लिये आठवें और बारहवें वर्ष में व्रतबन्ध विद्वानों ने श्रेष्ठ कहा है, और कहे हुए समय यदि द्विगुण व्यतीत हो जाय तो 'गौण' काल होता है।

अथ उपनयने गुरुशुद्धिः—

बटुकन्याजन्मराशेस्त्रिकोणायद्विसप्तगः।
श्रेष्ठो गुरुः खषट्त्र्याद्ये पूजयाऽन्यत्र निन्दितः॥

बालक या कन्या के जन्म राशि से ९, ५, ११, २, ७, राशि में स्थित गुरु श्रेष्ठ हैं और १०, ६, ३, १, इन राशियों में स्थित गुरु निषिद्ध हैं अर्थात् श्रेष्ठ नहीं हैं।

अथ गुरुदौष्ट्यादौ परिहारमाह—

स्वोच्चे स्वभे स्वमैत्रे वा स्वांशे वर्गोत्तमे गुरुः।

रिःफाष्टतुर्यगोपीष्टो नीचारिस्थः शुभोऽप्यसत् ॥

अपने उच्च में, अपने गृह में, अपने मित्र की राशि में, अपने नवांश में, अपने वर्गोत्तम में स्थित रहने से गुरु द्वादश, चतुर्थ, अष्टम राशि में रहने पर भी शुभ हैं। नीच और शत्रु राशि में स्थित गुरु शुभ होने पर भी अशुभ फल देते हैं।

अथ छुरिकाबन्धनम्—

विचैत्रव्रतमासादौ विभौमास्ते विभूमिजे ।
छुरिकाबन्धनं शस्तं नृपाणां प्राग्विवाहतः ॥

चैत्र को छोड़ व्रतबन्ध में कहे हुये महीनों में भौमास्त तथा कुजवार को छोड़कर विवाह से पहले राजाओं को हथियार बांधना शुभ है।

अथ वरवरण ( तिलक ) मुहूर्त्तः—

वरवृत्तिं शुभे काले गीतवाद्यादिभिर्युतः ।
ध्रुवभे कृत्तिकापूर्वाः कुर्याद्वापि विवाहभे ॥
उपवीतं फलं पुष्पं वासांसि विविधानि च ।
देयं वराय वरणे कन्याभ्रात्रा द्विजेन वा ॥

शुभ मुहूर्त्त में गीत वाद्य से युक्त होकर ध्रुवसंज्ञक, कृत्तिका, तीनों पूर्वा और विवाह में कहे हुये नक्षत्रों में, यज्ञोपवीत, फल पुष्प तथा अनेक प्रकार के वस्त्र, रत्न आदि से युक्त होकर कन्या के भाई या ब्राह्मण वर का वरण ( तिलक ) करे।

अथ कन्यावरणम्—

पूर्वात्रयश्रवणमित्रभवैश्वदेवहौताशवासवसमीरणदैवतेषु ।
द्राक्षाफलेषु कुसुमाक्षतपूर्णपाणिरश्रान्तशान्तहृदयो वरयेत्कुमारीम् ॥

तीनों पूर्वा, श्रवण, अनुराधा, उत्तराषाढ़ा, ज्येष्ठा, धनिष्ठा, स्वाती और विशाखा इन नक्षत्रों में फल-पुष्पाक्षत से पूर्ण अञ्जलिबद्ध होकर शान्तिपूर्वक कुमारी ( कन्या ) का वरण करना शुभ है।

अथ तैलहरिद्रालेपनम्—

मेषादिराशिजवधूवरयोर्बटोश्च तैलादिलेपनविधौ कथिताऽत्र सङ्ख्या ।
शैला दिशः शरदिगक्षनगाद्रिबाणबाणाक्षबाणगिरयो विबुधैस्तु कैश्चित् ॥

वक्ष्यमाण शतपद-चक्रानुसार वर, कन्या या कुमार का नामाद्यक्षर से

नामराशि जानकर मेषादि राशिक्रम से तैलादिलेपन में पण्डितों ने ७, १०, ५, १०, ५, ७७, ५, ५, ५, ५, ७, संख्या कही है।

अथ मण्डपनिर्माणम्, तस्य लक्षणम्—

मङ्गलेषु च सर्वेषु मण्डपो गृहमानतः।
कार्यः षोडशहस्तो वा द्विषड्ढस्तो दशावधि॥
स्तम्भैश्चतुर्भिरेवात्र वेदी मध्ये प्रतिष्ठिता।
शोभिता चित्रिता कुम्भैरासमन्ताच्चतुर्दिशम्॥
द्वारविद्धा बलीविद्धा कूपवृक्षव्यधा तथा।
न कार्या वेदिकाः तज्ज्ञैः शुभमङ्गलकर्मणि॥

सब मङ्गल कार्यों में कर्त्ता के हाथ से सोलह, बारह या दश हाथ चारों तरफ बराबर माप का मण्डप बनाना चाहिये। जिसके बीच में एक सुन्दर वेदी, चार स्तम्भ और चारों दिशा अनेक रङ्ग से चित्रित शोभायमान कलश से युक्त रहे। द्वार, कूप, वृक्ष, खात, दीवार इत्यादि के वेध से रहित विद्वानों के बतलाये हुए मार्ग से बनाना श्रेष्ठ है।

अथ मण्डपनिर्माणमुहूर्त्तः—

ऐशान्यां स्थापयेत्कुम्भं सिंहादित्रिभगे रवौ।
वृश्चिकादित्रिभे वायौ नैर्ऋत्यां कुम्भतस्त्रिभे।
वृषात्त्रये तथाऽऽग्नेय्यां स्तम्भखातं तथैव हि।

सिंहादि तीन राशियों में सूर्य के रहने से ईशान कोण में स्तम्भ तथा कुम्भ का पहले स्थापन करना शुभ है। वृश्चिक आदि तीन राशियों में रहने से वायु कोण में, कुम्भ आदि तीन राशि में नैर्ऋत्य कोण में और वृष आदि तीन राशियों में सूर्य के होने से अग्नि कोण में स्तम्भ और घट का स्थापन शुभ है।

अथ विवाहमासाः—

दिनाधिपे मेषवृषालिकुम्भनृयुग्मनक्राख्यघटर्भसंस्थे॥
माघद्वये माधवशुक्रयोश्च मुख्योऽथ वा कार्त्तिकमार्गयोश्च॥

सूर्य के मेष, वृष, वृश्चिक, कुम्भ, मिथुन, और मकर में रहने से माघ, फाल्गुन, वैशाख, ज्येष्ठ, कार्तिक, अग्रहण आदि महीनें में विवाह शुभ होता है।

अथ विवाहतिथयः—


प्रतिपद् दुःखजननी द्वितीया प्रीतिवर्द्धिनी।

तृतीयायां च सौभाग्यं चतुर्थी धननाशिनी ॥
पञ्चम्यां सुखवित्तानि षष्ठी विघ्नप्रदायिनी ।
विद्याशीलसुखाप्तिः स्यात् सप्तम्यामफलाऽष्टमी ॥
नवमी शोकदा प्रोक्ता आनन्दो दशमीदिने ।
सुखमेकादशी ज्ञेया सफला द्वादशी स्मृता ।
मानपुत्रा त्रयोदश्यां चतुर्दश्यां तु दोषदा ॥
फलं बहुविधं नित्यं पञ्चदश्यां विशेषतः ।
अमायां चैव रिक्तायां करणे विष्टिसंज्ञके ।
यः करोति विवाहं च शीघ्रं याति यमालयम् ॥

प्रतिपत्, द्वितीया, तृतीया, चौथ, पञ्चमी, षष्ठी, सप्तमी, अष्टमी, नवमी, दशमी, एकादशी, द्वादशी, त्रयोदशी, चतुर्दशी इन तिथियों में विवाह होने से क्रमशः दुःख, प्रीति, सौभाग्य, धननाश, सुख और वित्त, विघ्न, विद्या-शील और सुखकी प्राप्ति, निष्फल, शोक, आनन्द, सुखप्राप्ति, मनोरथ सिद्धि, यश और लाभ, कष्ट ये फल होते हैं। और पञ्चदशी ( पूर्णिमा ) में अनेकविध सुख लाभ होता है। अमावास्या, रिक्ता ( चतुर्थी, चतुर्दशी, नवमी ), भद्रा में यदि विवाह किया जाय तो शीघ्र ही मृत्यु होती है।

अथ विवाहदिनानि—

गुरुशुक्रेन्दुपुत्राणां दिनेषु परिणीयते ।
या कन्या सा भवेन्नित्यं भर्तुश्चित्तानुवर्त्तिनी ॥
अर्कार्किभौमवाराणां दिनेषु कलहप्रिया ।
सापत्न्यं समवाप्नोति तुषारकरवासरे ॥

बृहस्पति, शुक्र और बुध दिनों में विवाह होने से कन्या स्वामी को प्रिय करनेवाली होती है। सूर्य, शनि तथा मङ्गल दिन में कलहकारिणी होती है और सोमवार को विवाह होने से सापत्न्य ( सौतिन ) वाली होती है।

अथ विवाहनक्षत्राणि—

सौम्यपित्र्यर्क्षहस्ताश्च मैत्रनैर्ऋतिवायवः ।
त्रीण्युत्तराणि पौष्णं च रोहिणी शोभनप्रदा ॥
अन्याः सर्वा विवर्ज्याः स्युस्ताराः परिणये सदा ॥



सौम्यसंज्ञक, मघा, हस्त, अनुराधा, मूल, स्वाती, तीनों उत्तरा, रेवती और

रोहिणी ये सभी नक्षत्र विवाह में शुभप्रद हैं, और शेष नक्षत्र विवाह में वर्जित हैं।

अथ विवाहलग्नानि—

जारसक्ता क्रिये लग्ने वृत्तिभ्रष्टा वृषोदये।
कुलद्वये शुभा प्रोक्ता तथा च मिथुनोदये॥
नृशंसा कुलटा कर्के सिंहे वन्ध्या सकृत्प्रसूः।
पतिश्वशुरयोः प्रीता कन्यायां सुरतप्रिया॥
तुलोदये धनाढ्या स्याद् वृश्चिके नित्यमास्थिता।
कुलटा चापपूर्वार्द्धे प्रौढा चातिसती परे॥
परशक्त्या मृगे कुम्भे मीने दुश्चारिणी द्वयोः।
बलिनो राशयः सर्वे यथाप्रोक्तफलप्रदाः॥*

मेष लग्न में अन्य पुरुष में आसक्ता, वृष में वृत्तिभ्रष्टा, मिथुन में मातृ-पितृकुल में श्रेष्ठ, कर्क में विश्वासघातिनी, सिंह में वन्ध्या, या काकवन्ध्या, कन्या में स्वामी और श्वशुर की प्रीति करने वाली तथा सुरतप्रिया, तुला में धनाढ्या, वृश्चिक में श्रद्धावती, धनु के पूर्वार्द्ध में कुलटा और उत्तरार्द्ध में सती, मकर में कन्या में आसक्ता एवं कुम्भ और मीन में विवाह होने से स्त्री व्यभिचारिणी होती है। यह फल प्रत्येक राशिके बलवान् होने से विवाह में ठीक ठीक होता है।

इति विवाहप्रकरणम्।

अथ वधूप्रवेशः। तत्र समयनियमः—

आरभ्योद्वाहदिवसात् षष्ठे वाप्यष्टमे दिने।
वधूप्रवेशः सम्पत्त्यै दशमेऽथ समे दिने॥

विवाह के दिन से सोलह दिनके भीतर छठा, आठवां, दशवां या सम दिन जैसे २-४ इत्यादि दिनों में वधूप्रवेश शुभदायक है।

---

* नाह्लिदत्तपञ्चविंशतिकायाम्—

रेवत्युत्तररोहिणीमृगमघामूलानुराधाकर-
स्वातीषु प्रमदातुलामिथुनके लग्ने विवाहः शुभः।
मासाः फाल्गुनमाघमार्गशुचयो ज्येष्ठस्तथा माधवः
शस्ताः सौम्यदिनं तथैव तिथयो रिक्ताकुहूर्वर्जिताः॥

अथ वधूप्रवेशमुहूर्त्तः—

पौष्णात् कभाच्च श्रवणाच्च युग्मे हस्तत्रये मूलमघोत्तरासु ।
पुष्ये च मैत्रे च वधूप्रवेशो रिक्तेतरे व्यर्ककुजे च शस्तः ॥

रेवती, अश्विनी, रोहिणी, मृगशिरा, श्रवण, धनिष्ठा, हस्त, चित्रा, स्वाती, मूल, मघा, तीनों उत्तरा, पुष्य और अनुराधा इन नक्षत्रों में, रिक्ता वर्जित तिथि, रवि और मङ्गल छोड़कर शेष दिनों में वधूप्रवेश शुभ है ।

अथ द्विरागमनशब्दार्थः—

विवाहसमये बाला व्रजेद्भर्तृगृहं प्रति ।
पुनस्तातगृहाद्यात्रा तद्द्विरागमनं स्मृतम् ॥

विवाह के बाद स्वामी के घर जाना वधूप्रवेश है, उसके बाद पिता के घर से यात्रा का नाम द्विरागमन है ।

अथ द्विरागमने वर्षव्यवस्था—

धनं हानिः सुखं नाशो भोगो वैरं ततः सुखम् ।
प्रथमाब्दात् फलं ज्ञेयं क्रमाद्बध्वा द्विरागमे ॥
श्वश्रूं हन्त्यष्टमे वर्षे श्वशुरं च दशाब्दके ।
सम्प्राप्ते द्वादशे वर्षे पतिं हन्ति द्विरागमे ॥

विवाह से लेकर प्रथम आदि वर्षों में द्विरागमन होने से धन, हानि, सुख, नाश, भोग, वैर और सुख ये फल होते हैं तथा आठवें वर्ष में सास की, दशवें वर्ष में श्वशुर की और बारहवें वर्ष में द्विरागमन होने से स्वामी की मृत्यु होती है ।

अथ द्विरागमने मासाः—

वैशाखे सुभगा प्रभूतधनिनी मार्गे च पुत्रान्विता
फाल्गुन्ये पतिवल्लभा प्रियजने नित्यं प्रिया पुत्रिणी ।
वन्ध्या दुर्भगनिर्धना विरहिणी सोद्वेगिता नित्यशो
नूनं देवसुतापि दुःखमतुलं प्राप्नोति मासान्तरे ॥

वैशाख में सौभाग्यवती तथा धन संयुक्ता होती है । और अग्रहण में बहुपुत्रा, फाल्गुन में पतिप्रिया, बन्धुवर्ग में प्रेम करनेवाली और पुत्रवती होती है । इससे अन्य महीनों में द्विरागमन होने से वन्ध्या, दुर्भगा, दरिद्रा, स्वामी से त्यक्ता, उद्वेगयुक्ता तथा स्वामी और पुत्र से बड़े-बड़े कष्ट पाने वाली होती है ।

अथ द्विरागमनमुहूर्त्तः—

मृदुध्रुवक्षिप्रचरेऽपि मूले तिथौ गमोक्ते शुभवासरे च ।
रवीज्यशुद्धे समये वधूनां द्विरागमः शुक्लदले प्रशस्तः ॥

मृदु, ध्रुव, क्षिप्र और चर संज्ञक, मूल इन नक्षत्रों में, यात्रा में कहे हुए तिथि तथा शुभ दिन में, रवि और बृहस्पति के शुद्ध रहने पर शुक्लपक्ष में द्विरागमन करना श्रेष्ठ है ।

इति द्विरागमनप्रकरणम् ।

अथ नववधूपाकारम्भदिनम्—

मृगोत्तरातिष्यकृशानुशाक्रे श्रुतित्रये ब्रह्मद्विदैवपौष्णे ।
शुभे तिथौ व्याररवौ प्रकुर्यान्नवा वधूर्नूतनपाककर्म ॥

मृगशिरा, तीनों उत्तरा, पुष्य, कृत्तिका, ज्येष्ठा, श्रवण, धनिष्ठा, शतभिषा, रोहिणी, विशाखा और रेवती इन नक्षत्रों में, शुभ तिथि में और मङ्गल तथा रविवार को छोड़कर शेष दिनों में नववधू को सर्वप्रथम पाक करना ( रसोई करना ) श्रेष्ठ है ।

अथ स्त्रीणां केशवन्धनम्—

वातोत्तराश्रवणशङ्करवाजिमूल-
पुष्यादितीन्दुकरपौष्णपुरन्दरेषु ।
पक्षे सिते रविनिशाकरसौम्यवारे
धम्मिल्लबन्धनविधिः शुभदो मृगाक्ष्याः ॥

स्वाती, तीनों उत्तरा, श्रवण, आर्द्रा, अश्विनी, मूल, पुष्य, पुनर्वसु, मृगशिरा, हस्त, रेवती और ज्येष्ठा इन नक्षत्रों में, शुक्लपक्ष में, रवि, सोम और शुभ वारों में स्त्रियों के लिये केशवन्धन ( चोटी मढ़वाना ) शुभ है ।

अथ लाक्षाभरणधारणम्—

यावद्भास्करभुक्तिभानि दिवसे धिष्ण्यानि संख्या तथा
वह्निं भूतगुणाब्धिसप्तनयनं पृथ्वीकरेन्दुक्रमात् ।
सूर्यारौ कविसौम्यराहुरविजा जीवः शशी केतवः
क्रूरे हानिशुभे शुभं च कथितं चक्रे करे भूषणम् ॥



सूर्य के नक्षत्र से क्रमशः ३, ५, ३, ४, ७, २, १, २, १ इतने संख्यक

नक्षत्रों में सूर्य, मङ्गल, शुक्र, बुध, राहु, शनि, बृहस्पति, चन्द्र और केतु इनमें शुभग्रहों के अंश में, शुभ और पापग्रहों के अंश में स्त्रियोंके लिए चूड़ी पहनना अशुभ कहा है।

अथ अलङ्करणधारणम्—

चित्राविशाखापवनानुराधावस्वश्विनीभास्कररेवतीषु।
आदित्यशुक्रेन्दुजजीववारे लग्ने स्थिरे स्त्री कनकादि दध्यात्॥

चित्रा, विशाखा, स्वाती, अनुराधा, धनिष्ठा, अश्विनी, हस्त और रेवती, इन नक्षत्रों में सूर्य, शुक्र, बुध और बृहस्पति दिन में तथा स्थिर लग्न में स्त्री के लिये सुवर्ण आदि अलंकरण ( जेवर ) धारण करना शुभ है।

अथ चुल्हिकास्थापनम्—

तुरगयमविशाखाब्राह्मसौम्योत्तरेषु
ज्वलनजलधनिष्ठामूलशूलायुधेषु।
रविशनिकुजवारे चुल्हिका स्थापनीया
ज्वलति सुचिरधीरव्यञ्जनस्वादुकर्त्री॥

अश्विनी, भरणी, विशाखा, रोहिणी, आश्लेषा, तीनों उत्तरा, कृत्तिका, पूर्वाषाढा, धनिष्ठा, मूल और शतभिषा इन नक्षत्रों में, रवि, शनि, तथा कुज, दिनों में चुल्हिका स्थापन करने से चुल्हिका ठीक से जलती है और भोजन स्वादिष्ट बनता है।

अथ चुल्हिकोपरि मृद्भाण्डस्थापनम्—

चुल्हिकोपरि मृद्भाण्डं स्थापयेन्नैव कामिनी।
भृगुचन्द्रमसोर्वारे, स्नायान्नैव च वारुणे॥

शुक्र और चन्द्रवार को कामिनी (स्त्री) चूल्हे पर मृद्भाण्ड (मिट्टी के बरतन) का स्थापन न करें। और शतभिषा नक्षत्र में स्नान न करे।

अथ शतभिषायां स्नाने परिहारः—

चन्द्रे शतभिषां प्राप्ते नारी न स्नानमाचरेत्।
भ्रमात् स्नाता तदा पुष्पगन्धाद्यैः पूजयेत्पतिम्॥

शतभिषा नक्षत्र में चन्द्रमा हो तो स्त्री स्नान न करे। यदि भ्रम से स्नान करें तो पुष्प चन्दन से अपने स्वामी की पूजा करे।

अथ पुंसां नूतनवस्त्रधारणमुहूर्त्तः—

ब्रह्मानुराधवसुपुष्यविशाखहस्तचित्रोत्तराश्विपवनादितिरेवतीषु ।
जन्मर्क्षजीवबुधशुक्रदिनोत्सवादौ धार्यं नवं वसनमीश्वरविप्रतुष्टयै ॥

रोहिणी, अनुराधा, धनिष्ठा, पुष्य, विशाखा, हस्त, चित्रा, तीनों उत्तरा, अश्विनी, स्वाती, पुनर्वसु, रेवती और जन्म के नक्षत्र, इन नक्षत्रों में बृहस्पति, बुध और शुक, दिनों में तथा यज्ञादि उत्सव कार्य में राजा और ब्राह्मण के प्रसन्नार्थ पुरुष नवीन वस्त्र धारण करें।

अथ स्त्रीणां नूतनवस्त्रधारणम्—

धनिष्ठा रेवती चैव तथा हस्तादिपञ्चकम् ।
अश्विनी गुरुशुक्राणां स्त्रीणां वस्त्रस्य धारणम् ॥

धनिष्ठा, रेवती, हस्त, चित्रा, स्वाती, विशाखा, अनुराधा और अश्विनी नक्षत्रों में बृहस्पति और शुक्र दिन में स्त्री के लिये नूतन वस्त्रधारण करना श्रेष्ठ है।

अथ स्त्रीणां भूषणधारणे विशेषः—

नासत्यपौष्णवसुभे करपञ्चके च मार्त्तण्डभौमगुरुदानवमन्त्रिवारे ।
लाक्षासुवर्णमणिविद्रुमशंखदन्तरक्ताम्बराणि बिभृयात् प्रमदागणश्च ॥

अश्विनी, रेवती, धनिष्ठा, हस्त, चित्रा, स्वाती, विशाखा और अनुराधा नक्षत्रों में, सूर्य, मङ्गल, बृहस्पति, शुक्र वारों में स्त्रियों के लिये लाक्षाभरण ( लाह की चूड़ी ), सुवर्ण की चूड़ी वगैरह मणि ( रत्न जड़ित भूषण ), मूङ्गा, शंख-चूड़ी, लाल वस्त्र आदि धारण करना शुभ है।

अथ सूचीकर्म—

चित्रादित्यश्विनीमैत्रश्रविष्ठासु शुभे दिने ।
सूचीकर्मविधानं च शुभं प्रोक्तं मनीषिभिः ॥

चित्रा, पुनर्वसु, अश्विनी, अनुराधा और श्रवण इन नक्षत्रों में, शुभ दिनों में सूचीकर्म करना या सीखना विद्वानों ने शुभ बतलाया है।

अथ वस्त्रक्षालनम्—

शनिभौमदिने श्राद्धे कुहू षष्ठी निरंशके ।
वस्त्राणां क्षारसंयोगो दहत्यासप्तमं कुलम् ॥

शनि, मंगल और माता-पिता के श्राद्ध दिन अमावास्या, षष्ठी और नवमी तिथियों में वस्त्र धुलवाना वर्जित है। धुलवाने से सात पुरुष तक पितृगणों को दग्ध करता है।

अथ तैलाभ्यङ्गविचारः—

रवौ गुरौ भृगौ भौमे षष्ठ्यां संक्रान्तिवासरे ।
चित्रावैष्णवहस्तेषु तैलाभ्यङ्गं न कारयेत् ॥

रवि, बृहस्पति, शुक्र तथा कुजवार में, रविसंक्रान्ति के दिन में, और चित्रा, श्रवण में तथा हस्त नक्षत्रों में तैल लगाना मना है ।

अथ दोषपरिहारः—

रवौ पुष्पं गुरौ दूर्वां मृत्तिकां कुजवासरे ।
भार्गवे गोमयं दत्त्वा तैलदोषस्य शान्तये ॥

रवि को पुष्प, बृहस्पति को दूर्वा, मङ्गल को मिट्टी और शुक्र को गोमय ( गोबर ) दोष निवारण के लिये तैल में डालकर लगाना चाहिये ।

अथ तैलविचारः—

सार्षपं सघृतं वापि यत्तैलं पुष्पवासितम् ।
अदुष्टं पक्वतैलं च स्नानाभ्यङ्गे च नित्यशः ॥

सरसों का तैल, घृत मिला हुआ तैल, सुगन्धियुक्त तैल ( गुलरोगन, चमेली, आँवला इत्यादि ) और पकाया हुआ तैल, नित्य स्नान के लिये वर्जित नहीं है ।

अथ कृषिप्रकरणम्, तत्रादौ हलप्रवहणम्—

सप्तम्येकादशी चैव पञ्चमी दशमी तथा ।
त्रयोदशी तृतीया च प्रशस्ता हलकर्मणि ॥
मृदुध्रुवक्षिप्रचरेषु मूलमघाविशाखासहितेषु भेषु ।
हलप्रवाहं प्रथमं विदध्यान्नीरोगमुष्कान्वितसौरभेयैः ॥
विष्कम्भवज्रव्यतिपातगण्डातिगण्डमन्दारदिनं विहाय ।
सम्पूज्य दूर्वाक्षतगन्धपुष्पैर्हलं विदध्यात् कृषिकर्मकर्त्ता ॥

सप्तमी, एकादशी, पञ्चमी, त्रयोदशी और तृतीया ये तिथियाँ हलकर्म में श्रेष्ठ हैं, एवं मृदु, ध्रुव, क्षिप्र और चर संज्ञक, मूल, मघा और विशाखा इन नक्षत्रों में नीरोग बैल से प्रथम वार हल चलवाना शुभ है । विष्कुम्भ, वज्र, व्यतिपात, गण्ड और अतिगण्ड योग, शनि और मङ्गल को छोड़कर शेष दिनों में दूर्वाक्षत, पुष्प और चन्दन से पूजन करके हल चलवाना श्रेष्ठ कहा गया है ।

अथ बीजवपनम्—

हस्तपौष्णाश्विसौम्याश्च पुष्यमैत्रानिलानलाः ।
रोहिणी च प्रशस्ताः स्युः सर्वबीजनिवापने ॥
ओजाश्च तिथयः श्रेष्ठाः पक्षयोरुभयोरपि ।
प्रथमां नवमीं युग्माममावास्यां च वर्ज्जयेत् ॥
द्वितीया दशमी षष्ठी मध्यमास्तिथयः परे ।
चन्द्रज्ञजीवशुक्राणां वारा वर्गादयः शुभाः ॥
हलप्रवाहवद् बीजवपनस्य विधिः स्मृतः ।
रोपणे सर्वसस्यानां कर्त्तने प्रथमेऽपि च ॥

हस्त, रेवती, अश्विनी, आश्लेषा, पुष्य, अनुराधा, स्वाती, कृत्तिका और रोहिणी इन नक्षत्रों में एवं दोनों पक्षों ( शुक्लपक्ष, कृष्णपक्ष ) की विषम ३, ५, ६. आदि तिथियों में बीजवपन श्रेष्ठ है। प्रतिपदा, नवमी अमावास्या को छोड़ कर अन्य तिथि श्रेष्ठ तथा द्वितीया, दशमी, षष्ठी ये मध्यम हैं। सोम, बुध, बृहस्पति और शुक्र, दिनों में हलप्रवाहोक्त विधि से सब बीजों का बोना तथा रोपना ( लगाना ) और प्रथम २ काटना शुभ कहा गया है।

तीक्ष्णाजपादकरवह्निवसुश्रुतीन्दु-
स्वातीमघोत्तरजलान्तकतक्षपुष्ये ।
मन्दाररिक्तरहिते दिवसेऽतिशस्ता
धान्यच्छिदा निगदिता स्थिरभे विलग्ने ॥

तीक्ष्ण संज्ञक, पूर्वाभाद्रपदा, हस्त, कृत्तिका, धनिष्ठा, श्रवण, मृगशिरा, स्वाती, मघा, तीनों उत्तरा, पूर्वाषाढ़ा, भरणी, चित्रा और पुष्य नक्षत्रों में एवं शनि, मङ्गल, दिन को छोड़ कर शेष दिनों में, रिक्ता तिथि वर्जित तिथियों में और स्थिरलग्न ( वृष, सिंह, वृश्चिक, कुम्भ ) में धान्य का छेदन ( खेत कटवाना ) शुभ कहा गया है।

अथ कणमर्दनम्—

भाग्यार्यमश्रुतिमघेन्द्रविधातृमूल-
मैत्रान्त्यभेषु कथितं कणमर्दनं सत् ॥

पूर्वाफाल्गुनी, उत्तरभाद्र, श्रवण, मघा, ज्येष्ठा, रोहिणी, मूल, अनुराधा और रेवती इन नक्षत्रों में कण ( बोझे का ढेर ) का मर्दन शुभ है।

अथ मेधिस्थापनम्—

वटोदुम्बरनीपानां शाखोटवदरस्य च ।
शाल्मलेर्मुशलेनैव मेधिं कुर्याद्विचक्षणः ॥
कपित्थविल्ववंशानां मेधिर्नैव शुभावहा ।
न पौपे न च रिक्तायां न कुजार्किदिने तथा ॥
मृदुध्रुवचरर्क्षेषु खाते द्रव्यं नियुज्य च ।
सम्पूज्य धान्यं बद्ध्वाऽग्रे मेधिं संस्थापयेद् बुधः ॥

बड़, गूलर, कदम, साहोड़ा, वैर, और सेमर काष्ठों की मेधि ( मेह ) बनवानी चाहिये। खैर, वेल और बांस की मेधि शुभदायक नहीं होती है। पौष महीना, रिक्ता तिथि, मङ्गल और शनिवार को छोड़ कर मृदु, ध्रुव, चरसंज्ञक नक्षत्रों में खात में पुष्प द्रव्यादि देकर पूजन कर मेधिके अग्रमें धान्य बांधकर स्थापन करना शुभ है।

अथ धान्यस्थापनम्—

मिश्रोग्ररौद्रभुजगेन्द्रविभिन्नभेषु कर्क्काजतौलिरहिते च तनौ शुभाहे ।
धान्यस्थितिः शुभकरी गदिता ध्रुवेज्यद्वीशेन्द्रदस्रचरभेषु च धान्यवृद्धिः ॥

मिश्र और उग्रसंज्ञक, आश्लेषा और ज्येष्ठा इन नक्षत्रों को छोड़कर शेष नक्षत्रों में, कर्क, मेष और तुला लग्नसे भिन्न लग्नों में शुभ दिनों में ध्रुवसंज्ञक, पुष्य, विशाखा, ज्येष्ठा, अश्विनी, चरसंज्ञक नक्षत्रों में धान्य का स्थापन करना वृद्धिदायक है।

अथ बीजरक्षणम्—

रोहिणी रेवती मूलं स्वाती हस्तो मृगस्तथा ।
आषाढोत्तरयुक्ता च तथा भाद्रपदा मघा ॥
शस्तानि सर्वधान्यानां शुभे वारे स्थिरोदये ।
गर्गादिमुनिभिः प्रोक्ताः प्रशस्ता बीजरक्षणे ॥

रोहिणी, रेवती, मूल, स्वाती, हस्त, मृगशिरा, उत्तराषाढा, उत्तराभाद्र, और मघा नक्षत्रों में, शुभदिन तथा स्थिरलग्नों में सब बीजों का स्थापन करना ( बीज रखना ) गर्गादिमुनियोंने शुभ कहा है।

अथ धान्यनिष्कासनम्



उत्तराम्बुपविशाखवासवे चन्द्रभौमगुरुशुक्रवासरे ।

